# श्रीसीतारामाभ्यां नमः
# नमः श्रीमन्मारुतनन्दनाय
# श्रीमते रामानन्दाचार्य्याय नमः

## रामदासं हनूमन्तं नत्वाचार्य्यशिरोमणिम् ।
## वक्ष्ये श्रीजानकीरामभक्तानांकार्यमुत्तमम् ॥

तत्रादौ श्रीजानकीरामोपासकानां तत्साद्दश्योपपत्तये तत्सद्दशरूपचिंतनस्यतद् धृतधनुर्वाणादिधारणस्य तद्धृतसिंदुरविंदुधारणस्य पीतादि वस्त्रधारणस्य चेत्यादेरावश्यकत्वमुपपद्यते “यो यं स्मरति स तद्रूपो भवति” "यो पच्छ्रद्धः स एव सः" "देवो भूत्वा देवं यजेन्नादेवो देवमर्चयेत्" इत्यादिवचनेभ्यः तत्र पूजकस्यस्वपूज्यदेवतात्मकत्वानुपपत्तेस्तदङ्गीकारेतस्य तस्य तद्यजनानुपपत्तेश्च "गङ्गायांघोषः” अत्र गङ्गापदस्य गङ्गातीरे लक्षणेवात्रापि देवपदस्य देवसद्दशे लक्षणादेव देवसद्दशोभूत्वा इत्यर्थः । तच्च साद्दश्यं द्विविधम्, आभ्यंतरो वाह्यश्च तद् यथादौ मन्त्रमहोदध्यादि तन्त्रशास्त्रोक्तरित्यासूक्ष्मशरीरस्य वाय्वग्न्यादिवीजै शोषणदहनाभ्यां भस्मीकृत्य तत्प्लावनपिण्डीकरणादिना दिव्यशरीरं स्वेष्टदेवकैंकर्य्यानुरूपंनिष्पाद्य तत्र प्राणप्रतिष्ठामन्त्रेण प्रतिष्ठांकृत्वा तदनन्तरं प्रणवं संपुटितानि स्वमन्त्रबीजं संपुटितानि वा मात्रिकाक्षराण्यकारादिक्षकारान्तानि सृष्टिस्थिति संहारक्रमेण विरक्तः सन्यासी ब्रह्मचारी तुसृष्टिस्थितिसंहारसृष्ट्यन्तेन गृहस्थस्तु सृष्टिस्थितिसंहारसृष्टिस्थितिक्रमेण मस्तकाननाक्षिकरणाद्यङ्गप्रत्यङ्गेषु विन्यस्य स्वमन्त्राक्षराणामपि मस्तकादिषट् स्थानेषु सृष्टिसंहारस्थितिसृष्टिक्रमेण न्यासेन तत्पदन्यासेन च स्वेष्टभूषणादि न्यासेन च वहिस्तदायुधादि च स्वेष्टदेवसद्दशोभूत्वेत्यर्थः । देवं स्वेष्टदेवं जयेन्नादेव इत्युक्तरीत्या तत्समोपगमनयोग्यं तत्सद्दशं स्वस्वरूपमनिष्पाद्य वहिस्तदायुधादि धारणं कृत्वेत्यर्थः इत्युक्तोऽर्थः । द्वितीयस्तु देवसद्दशोऽभूत्वा स्वस्वरूपाकारतस्तत्साद्दश्यं विहायमन्त्रान्तराक्षरादिन्यासेन स्वेष्टदेवाधृतायुधादितिलकादिधारणेन च तदसद्दशो भूत्वेत्यर्थः ।

अनेन श्रीजानकीरामभक्तानां षडक्षरजपपराणां शंखचक्रधारणस्थानौचित्यं तथा धनुर्वाणाद्यधारणस्याज्ञानमूलकत्वं सूचितं भवति । अन्यथा "देवो भूत्वादेवं यजेन्नादेवोदेवमर्चयेत्" इति स्वेष्टदेवसाद्दश्यविधायकतदसाद्दश्यनिषेधकवचनविरोध्यायुधादिधारकस्य स्वेष्टदेवयजनयोग्यताऽभावेन तत्कृतं यजनादिकं सर्वं व्यर्थं भविष्यति । अत उपासकः

स्वेष्टदेवयजनयोग्यतार्थं, तत्सदृशस्वस्वरूपविज्ञानपूर्वकं तद् वस्त्रभूषणायुधादिधारणादिना स्वस्य तत्सारूप्यं
निष्पादयेत् । देहावसानकाले च तादृश स्वस्वरूपस्मृत्यर्थं सर्वदा स्वेष्टदेवसारूप्यमात्मनो भावयेत् । तथैव श्रुतिरप्याह "सदारामोऽहमित्येतत्तत्वतः प्रवदन्ति ये । न ते संसारिणो नूनं राम एव न संशयः" योयं स्मरति स तद् रूपो भवति" "यो यच्छ्रद्धः स एव सः" "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तंतमैवैति कौन्तेय सदा तद् भाव भावितः" इत्याद्याः स्मृतयोऽप्युक्तार्थस्य बादिन्यो वहवो सन्ति । तत्र प्रमाणायामपूर्वकोपासकस्य स्वरूपमाह "उपासकोऽयम्" इत्याभ्यांवाय्वाग्निबीजाभ्यां सपापपुरुषस्य लिंगशरीरस्य शोषणं दहनं च कृत्वाऽनन्तरं यमिति वायुवीजस्य द्वात्रिंशद्वारं जपेन पापपुरुषस्य भस्मदक्षिणनाशा द्वारा बहिर्निक्षिप्यावशिष्टं लिंगशरीरस्य भस्मनम्, इत्यनेनपिङ्गलया पूरकेन षोडशवारं जपितेन पृथिवीवीजेन पिण्डीकृतस्य पिण्डस्य लम् इत्यनेनसुषुम्नया कुम्भकेन चतुष्षष्टिवारं जपितेन सुवर्णपिण्डाकारं कृत्वा हम्' इत्यनेन इडया रेचकेन द्वात्रिंशद्वारजपितेनाकाशवीजेन स्वेष्टदेवसेवानुरूपं स्ववांच्छिताकारं दिव्यविग्रहं विभाव्य तं च स्वेष्टमन्त्राक्षयदिन्यासेन तद्भूषणादिन्यासेन तद् धारणेन च तदायुधादिन्यासेन तद्धारणेन च स्वेष्टदेवसदृशं संपादयेदित्येतत् सर्वं तन्त्रशास्त्रे प्रसिद्धम् ।

अतः श्रीरामोपासकस्य पीतवस्त्रादिभूषणधनुर्वाणादितन्मुख्यायुधानि चावश्यंधार्य्याणि तथा जानक्युपासकस्य तत्प्राप्तिकामस्य तत्समानवर्णवस्त्रभूषणधनुर्वाणचन्द्रिकामुद्रिकादिसिन्दूरविन्द्वादि चावश्यं धार्य्यम्, तद्युगलोपासकस्य तत्प्रापिकामस्य तादृश वस्त्रादिकं चन्द्रिकामुद्रिकासहितं धनुर्वाणादिकं सिन्दूरविन्दूमध्यगं तिलकं चावश्यं धार्य्यम्, तद्धारणं बिना तद् युगलोपासकत्वासिद्धेः तदुक्तं "नांकितोधनुर्वाणाभ्यो न मन्त्रोऽस्ति षडक्षरः । ननाम राम संबंधि न रामोपासको भवेत्" इत्यादि ।

"यो वैनित्यं धनुर्वाणादंकितो भवेत्' स पाप्मानं तरति, स संसारं तरति स भगवदाश्रितो भवति, स भगवद्रूपो भवति" इत्यथर्वणीया श्रुतिः श्रीजानक्युपासनां विहाय केवलस्वोपासनापरं न भावनास्पदं स्वरूपं दर्शयति न च तं स्वं प्रापयति, श्रीरामः यदा च प्रापयति स्वंतदा श्रीजानक्युपासनाद्वारैव । इत्याह श्रीजानकी स्तवराजे - "कदाचिच्छ्रीशिवो रूपं ज्ञातुमिच्छुर्हरेः परम् । दिव्य वर्षशतं ध्यात्वा विधिनाविधिवेदिना ॥१॥ जजाप परमं जाप्यं रहस्ये स्थितचेतसा । प्रसन्नोऽभूत्तदादेवः श्रीरामः करुणाकरः ॥२॥ मन्त्राराध्येन रूपेण भजनीयः सतां प्रभुः । द्रष्टुमिच्छसि यद् रूपं मदीयंभावनापदम् ॥३॥ ह्यलादिनीं हरेः शक्तिं स्तूयाः सात्वत संमताम् । तदाराध्यस्तदा रामस्तदधीनस्तया विना ॥४॥ तिष्ठामि न क्षणं शंभो जीवनं परमं मम । इत्युक्तादेवदेवेशो वशीकरणमात्मनः ॥५॥ पश्यतस्तस्य रूपं स्वमन्तर्ध्यानं दधौ प्रभुः ।" इत्यादिना ।

अतस्तद् युगलोपासनापरत्वेन भवितव्यम् । तत्प्राप्तिकामस्य तस्यैवं भूतस्यधृतधनुर्वाणादिकस्यापि श्रीजानकीधृतसिन्दूरविन्दुः धारणं विना न

युगलोपासकत्वमुपपद्यते, यतोऽतस्तेन सिन्दुरविन्दुमध्यगं तिलकं चावश्यं धार्य्यम् । तदुभयोपासकत्वोपपत्तये वह्नींवीजोपतिस्थिर्यस्यार्थसृष्टिशब्दसृष्टिकारणत्वेन व्याख्यातस्य तापिनी टीकाकारेणेत्येवंभूतस्य विन्दोः जानक्याञ्च "श्रीराम सानिध्यवसाज्जगदुत्पत्तिस्थितिसंहारकारिणी सा सीता भगवती ज्ञेया" इति श्रुत्या जगत्कारणत्वेन गीतायाः साधर्म्यात् । "अर्धमात्रात्मको रामः" इति रामरूपार्द्धमात्रासंनिहितस्य विन्दोः रामसान्निध्यवशादिति श्रुत्यारामसंनिहितत्वेनोक्तायाः श्रीजानक्याञ्च सर्वथैवोपपत्तेश्च जानकीरूपो बिन्दुरवश्यधार्यस्तद् भक्तैः । तदुक्तं "तिलकं रामरूपेण विन्दुरूपेण भूमिजाम् । धृत्वा श्रीरामभक्तानामग्रगण्यो गुणाग्रणीः । किं च सविन्दुर्ध्वपुण्ड्रस्य श्रीजानकीरामरूपवह्नि वीजरूपत्वाच्च सविन्दुमेव तिलकं धाय्र्यं तद्भक्तैः । तथाहि वह्नि वीजस्थस्वरहीनरेफस्य भ्रुवोर्मध्येऽर्द्धचन्द्राकारेण धारणात् तदु परिभ्रुवोः शिरः भागमारभ्य ललाटकेशपर्यन्तं बीजाकारयोरे खाद्वयोर्धारणात्, पुनर्वीजोपरिस्थस्यविन्दोः वर्णविपर्ययरीत्या तिलकाकारगतयो रेफाकारयोर्मध्ये धारणात् वह्निवीजस्यैव तिलकाकारेण श्रीजानकीरामभक्तानां शिरसि वर्तमानत्वमुपपद्यते, धारयन्ति च तदनन्यशरणास्तथैव बुद्ध्या । किं च श्रीजानक्याः श्रीरामातिप्रियत्वात् "इत्युक्ता देवदेवेशोवशीकरणमात्मनः" इत्युक्तेस्तस्य तद्वशीभूतत्वाच्च श्रीराममस्तके विन्दुरवश्यं कार्य्यः न तु चिह्नान्तरं तत्रकार्य्यम् । अन्यथा तस्य तच्चिह्नरूपदेवता दासत्वापत्तेः । किं च "पादमात्रामात्राञ्च पादाः" इति मांडूक्यश्रुत्या "सीतारामौ तन्मयावत्र पूज्यौ" इति श्रीरामतापिनी श्रुत्या च "वायुर्यथैको भुवनं प्रविष्टो जन्ये जन्ये पञ्चरूपो बभूव । कृष्णस्तथैकोऽपि जगद्हिताय शब्देनासौ पञ्च पदवी बभूव " इति गोपालतापिनीयश्रुत्या च भगवद् विषयिकवाच्यवाचकयोः सर्वथैक्योक्तेः तारकोपरिदृष्टस्य श्रुतस्य च विन्दोः सर्वथा तद्रूप श्रीरामललाट धृतत्वोपपत्तेः श्रुतिप्रमाणको विन्दुरवश्यं श्रीराम मस्तके कार्यः । किं च "सीतारामौ तन्मयौ" इत्युभयोस्तारकवीजमयत्वश्रुतेस्तयोर्मध्ये तन्मयत्वेन श्रुताया एकस्या जानक्या ललाटे वीजस्थ विन्दों स्मरणाद् धृतत्वाच्च तथैव तन्मयत्वेन श्रुतस्य द्वितीयस्यापि श्रीरामस्यललाटे वीजस्थविन्दोरवश्यं भाव्यात् बिन्दुरे व तद् भाले कार्यस्तद् भक्तैः स्वललाटेऽपि च ॐ रां ह्रीं श्रीं क्लीं, इत्यादिकं ज्ञेयम् कि च= ॐ रां ह्रीं श्रीं क्लीं, इत्येवमादि बीजानिसर्वाण्यपि शिरस्कानिदृश्यन्ते तेषां स्व स्व वाच्यैः सह तादात्म्यसंबन्धोऽन्यथानुपपद्यमानः ॐ रां ह्रीं श्रीं क्लीं इत्यादि बीजवाच्यान्विन्दुशिरस्कानुपपादयतीत्यतः सर्वेषामपि तत्तद्वीजवाच्य देवतोपपादकानां तत्तद् वीज पूर्वकतत्तन्मन्त्रवाच्यदेवतोपासकानां सविन्दुतिलकं धारणं तत्तद् वीजवाच्यस्वेष्टदेवशिरसि सबिन्दु तिलककरणं चोचितम्, दृश्यतेऽपि तद् वीजवाच्य तद् देवतोपासकावैष्णवाः शैवाः शाक्तादयश्च सविन्दुतिलकधारिणः । किं च सिन्दूरबिन्दुरुचिद्युतिदीप्तिमन्तम्, इति प्रमाणतः विन्दोः श्रीजानक्याश्च शिरसिधारणात् जानकीवाचकत्वेन जानकीरूपत्वाच्च श्रुतमहतत्वपर्यायस्य विन्दोः तन्त्र शास्त्रादौ, अर्थसृष्टिशब्द सृष्टिकारणब्रह्मोक्त्या जगत्कारणत्वोपपत्तेः । श्रीजानक्यास्तु, "श्रीरामसानिध्यवशाज्जगदुत्पत्तिस्थितिसंहारकारिणी, जगत्कारणत्व श्रवणेनोभयोः साधर्मेण समानकार्यकर्तृत्वेन चैकरूपत्वोपपत्तेः श्री- जानक्या श्रीरामस्य नैकट्यदर्शनवत् विन्दोः श्रीरामवाचकार्द्धमात्रा सामीप्यदर्शनात्तस्य श्रीजानकीवाचकोपपत्तेश्च । किं च

स्वचारित्र्येणधर्ममार्गप्रवर्तकजानकीधृतविन्दोः श्रुतिमूलकत्वोपपत्तेः सदाचारानुमितस्मृतिपरिकल्पितञ्चश्रुतिप्रमाणकत्वाच्च स्वेष्टदेव जानक्या स्वशिरसि धारणाच्च श्रीजानकीरामभक्तानामवश्येन स विन्दुतिलकधारणंयोग्यम् । किं च "कान्यकुब्जाद्विजाः सर्वे मागध माथुरवर्जिताः " इति श्रुतेः, अशेषोत्तमब्राह्मणनिदानभूताः कान्यकुब्जब्राह्मणाः, तदन्ये मागधमाथुराश्च ते सर्वे स्व स्व परंपरा धृतस्य विन्दोरेव धारिणोऽद्यापि दृश्यन्ते इति तेषां सर्वोत्तम ब्राह्मणानां सर्वोत्तमब्राह्मणमूलभूतत्वेन सर्वोत्तमाचाराणां सदाचारेणानुमितया स्मृत्या परिकल्पितायाः श्रुतेः प्रमाणत्वाच्च सर्वोत्तम ब्राह्मणैर्धृतस्य तदा चानुमितस्मृतिपरिकल्पितश्रुतिप्रमाणकस्य विन्दोर्धारणं सर्वेषामुचितं ब्राह्मणानां तु विशेषतः ब्राह्मणसम्प्रदायिनां सर्वथा तद् धारणमेवोचितं तन्मूलभूतैः पूर्वतनैः कान्यकुब्जब्राह्मणैः सर्वैरपि धृतत्वाच्च तत्त्यागपूर्वकतिलकान्तरधारिणाः स्वोत्तमपरं परागतधर्मत्यागेनाधार्मिकत्वप्रसक्तैः जात्यन्तरधर्मग्राहकत्वे वर्णशंकरत्वप्रसक्तेश्चेत्वलम् । ब्राह्मणकुलोत्पन्नानां तिलकांतरधारणनिरासेन तस्मात्सर्वेषां ब्राह्मणानां विन्दुतिलकधारणं चोचितं श्रीरामभक्तानांतु विशेषतस्तद्धारणं तदेवमुक्तं श्रुतिस्मृतिसदाचारप्रमाणकात्वात् । उक्तस्मृतिवाक्यानुमित श्रुतिप्रमाणकत्वाच्च, धनुर्वाणादिकमवश्यंधार्यम् ।श्रीजानकीरामभक्तउपासकैः, अत्राह कश्चित्, किं सर्वाण्यपि पौरुषेयवाक्यानि पक्षीकृत्य तत्तन्मूलभूताः श्रुतयोऽनुमेया, अस्ति वा कश्चित् विशेषस्तत्रेति चेदुच्यते, यानि वाक्यानि श्रुति विरुद्धार्थकानि तान्युपेक्ष्यानि यानि तु प्रत्यक्षं श्रुतिविरुद्धार्थकानि तानि पक्षी कृत्य तत्तन्मूलभूताः श्रुतयोऽनुमेया इत्येवमाह । जैमिनिसूत्रं विरोधेतूपेक्ष्यं ह्यसत्यनुमानम्, इति श्रुतिविरोधेसति पौरुषेयम्, असति प्रत्यक्षश्रुतिविरोधे स्मृतिवाक्येन तन्मूलभूतायाः श्रुतेरनुमानं कर्तव्यमितितदर्थः ।

प्रकृते तु धनुर्वाणादिधारणपराणां वाक्यानां प्रत्यक्षश्रुतिभिर्विरोधोऽवगम्यते । तथा

" प्राप्यञ्च ब्रह्मणोरूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधिनः । वदन्ति सकला वेदाः सेतिहासपुराणकाः । मुनयश्च महात्मानो वेदवेदाङ्गवेदिनः ।२। ”

इत्युक्तपञ्चविधिवेदार्थेषु मध्ये य आद्याचतुर्विधार्था ब्रह्मरूपादय तेषांमध्ये न कस्यापि विरोधित्वं नापि तद् विरोध्यङ्गप्रति पादकत्वमुपपद्यते तेषां वाक्यानामुपपद्यतेहि भगवदुपासनांगप्रतिपादकत्वेनोक्तचतुर्विधार्थभिन्नत्वम् । अन्यदपि-वेदोक्तचतुर्विधार्थपरश्रुत्युक्तार्थाङ्गप्रतिपादकश्रुत्यर्थोपवृहणरूपत्वेनोक्तसकल परमार्थश्रुतिमित्रत्वं चोपपद्यते तेषां, तथाहि नहि परब्रह्म विरोधित्वमुपपद्यते तेषां पर ब्रह्मणा श्रीरामेण तत्प्रियया च श्रीजानक्या धनुर्वाणादिधारणात् । नापि श्रुतिविरोधित्वं धर्मिष्टाग्रेसराणां “धर्ममार्ग चरित्रेण" इति श्रुतेः, स्वाचरणेन धर्ममार्ग प्रवर्तकानां सीतारामादीनांवेदविरुद्धपदार्थधारणानुपपत्तेः । नापि प्रत्यङ्गात्मविरोधित्वं पञ्चसंस्कारद्वारा तदुपकारकत्वात् परमेश्वरायुध त्वेनतद्वत्तत्वे । न च सकलजीवपूज्यत्वोपपत्तेश्च । न च भगवत्प्राप्त्युपायविरोधित्वं भगवद्भक्त्यङ्गत्वेन तदुपकारितया तन्मित्रत्वोपपत्तेः । नवा निषेधतदंगयोरन्यतरत्वमुपपद्यते, तेषां श्रुतीनां "परभार्यां नाभि गच्छेत्, सुरां नपिवेत्, तद्रुद्रस्य रुद्रत्वं यद् विशीर्यते, तद् हिरण्यं रजतमभूत तस्माद् वर्हिषि रजतं न देयम्" । इत्येवमादि

निषेधवत् "वेदेषु क्वचिदपि तदुक्तार्थस्य निषेधाश्रवणात् । धनुर्वाणविन्द्वादिकं नधारयेत्स्वश्रेय कामः।" इत्येवं । प्रत्युत श्रीजानकीरामाभ्यां धर्मिष्टाग्रेसराम्यां विन्द्वादेर्धनुर्वाणादेश्च धारणात् वेदविहितत्वञ्चोपपद्यते । तद्धारणस्यातस्तदाचरणानुमिता श्रुतिरपि तत्र प्रमाणमस्ति, विमतं जानकीरामचरणं श्रुतिप्रमाणकं भवितुमर्हति धर्मिष्ठाग्रसरधर्ममार्गप्रवर्तकाचरणत्वात् मन्वाद्याचरणवदिति ।

किं च इदानींतनानामपि शिष्टानां माध्वनिम्वादित्यविष्णुस्वामी सम्प्रदायिनां वैष्णवानां तथा शैवशाक्तादिनां विन्दुधारणत्व दर्शनाद् बहूनामनुग्रहस्य न्याय्याच्च तदाचारानुमितस्मृतिपरिकल्पिता श्रुतिरपि तत्र प्रमाणं भवति । यद्वा तदाचारानुमिता श्रुतिरपि तत्र प्रमाणं तदेवं तत्तदाचारपरिकल्पितायाः श्रुतेस्तत्र प्रमाणत्वे सत्यपि धनुर्वाणविन्द्वादिधारणत्वविधायकवाक्यानामपि वेदार्थविरोधीत्वासिद्धेः । प्रत्युततदुपकारत्वेन तन्मित्रत्वनिष्पत्तेस्तान्यपि पक्षीकृत्य तन्मूलभूताः श्रुतयोऽनुमेया, विमतानि वाक्यानि श्रुतिमूलकानि भवितुमर्हन्ति वेदाविरोधित्वान्मन्वादिप्रणीतवाक्यवदित्येवं विमतान्यवश्यं श्रुतिमूलकानि भवितुमर्हन्ति । वेदार्थोपकारकत्वेनतदुपबृंहणभूतत्वान्मन्वादिप्रेणीतवाक्यवदिति एवं च उपवृन्हणत्वंनाम तत्समानार्थकैर्वाक्यैः पदैर्वा तदर्थप्रकाशकत्वम्, तवेवं श्रुतिस्मृतितन्त्रादिप्रमाणकधनुर्वाणादिधारणं बिन्दुचन्द्रिकादि धारणं ये निन्दन्ति पण्डितमानिनः केवललोकवचनद्वारतस्ततो द्रव्यार्जनाय तेषां “श्रुतिः स्मृतिर्ममैवाज्ञातामुल्लंघ्य तु वर्तते । आज्ञाछेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥"
इति स्मृत्यैव भगवद् भक्तत्वेऽप्यवैष्णवत्त्वोक्ते र्भगवद्द्रोहित्वोक्तेश्च, सुतरां तत्प्रियभक्तद्रोहित्वोपपत्तेश्च, दुर्गतिर्भाव्या, उक्तरीत्या द्रव्योपार्जनहेतुकैहिकसुखाय श्रीजानकीरामोपासक धृतधनुर्वाणादिनिन्दायाः नरकप्रापकत्वात् । केचित् स्वपाण्डित्य मदान्धाः केचिदन्धपरंपरावन्तः पण्डितमानिनश्च वदन्ति वयं वयमेव वैष्णवाः अस्मदीया गृहस्था च भगवद् भक्ताः नान्याः' इति ते स्वकीयमवैष्णवत्वमन्येषु कर्मादीनुपायान्परित्यज्य भगवद्भक्त्यैक तत्परेष्वारोपयन्ति तावत् यावद् भगवदनन्यभक्तवादकं वैष्णवत्वावाधकं, स्वजात्यभिमानहेतुकं स्वजातीयकर्मनिष्ठत्वमात्मनो न पश्यन्ति जात्यभिमानवैष्णवत्त्वाभिमानयोः परस्परमुपमर्दकत्वात्, नोभयोरे कांहकारनिष्ठत्वेन सामानाधिकरण्यमुपपद्यते । तावच्चते तदारोपयन्त्यन्यत्र यावत्स्वाद्याचार्य्यस्य शूद्रकुलोत्पन्नत्वं वान्ताशित्वं वा श्रुति स्मृतिविरुद्धत्वं विचार्य न श्रान्ताः "श्रुतिः स्मृति ममैवाज्ञा तामुल्लंघ्य तु वर्तते। आज्ञाछेदी मम द्रोही मद् भक्तोऽपि न वैष्णवः”॥ इत्येवमादिस्मृतिर्येषामाचार्यस्य तदाचार्यत्वमेव श्रुतिविरोधित्वेन तदीयानां चावैष्णवत्वं पुनर्भगवद् द्रोहित्वञ्चोपपादयति । इदानीं प्रकारान्तरेण धनुर्वाणादिधारणं विधीयते । अस्य संप्रदायस्य आद्याचार्यो ब्राह्मणत्वाद्युत्तमजात्यभिमानस्य सर्वयात्यक्तमशक्यस्य केवलभागवत्तत्वाभिमानवाधकत्वं मत्वा “प्रपत्तौभक्तौ च प्रतिनियतचित्तम्" इत्येवमादिवेदान्त वचनात् विशुद्धभागवतप्रवर्तनाय मत्स्य कूर्मादीनामिव वैष्णवविषयिकनिकृष्टबुद्धिनिवारणाय

चात्मानं तुरीयवर्णकुले जनयामासेति । "अस्ति पूर्वपयोराशेः कापिदक्षिण रोधसि । मण्डले पाण्ड्यभूपस्य नगरी कारूकाह्वया ॥१॥ तत्रासीत् पादजातेषु कश्चिद् भागवताग्रणीः । श्रीमत्पद्मीतिनाडींद्रः सीमातीतं गुणोल्वणम् ॥२॥ तस्य धर्मचरोनामतनयः समजायत । चक्रपाणिस्ततो जातः चक्रपाणिपरायणः ॥३॥ अजायतसुतस्तस्माद्रत्नदासेति संज्ञितः । सुमतिं सुषुवेसोऽपि सुतं पाटललोचनम् ॥४॥ पुत्रं प्रासूतपाकारिं पुत्रं पाटललोचनः । क्यरीतितनयोजातः करीति रहितस्ततः ॥५॥ ततो जातः तस्माच्छठकोप इतीरितः । तमाहुः क्यरिजं सन्तः शठकोपं परांकुशम् ॥६॥ वकुलाभरणाख्यं च तमेव कारीनन्दनम् ॥७॥ इत्यादिश्रीनिवासाचार्य्यकविविरचितदिव्यसूरिचरिताख्यग्रन्थवचनेभ्यः तथैवास्य तुरीयवर्णावतारोऽपि नाऽऽचार्य्यत्वमञ्जकः इति चतुर्थवर्णोभगवत्पादजन्मकृतसकलेतरवैलक्षण्य युक्तः इति वचने तु द्राविडत्वं वेदनत्रैवर्णिकतांगतः “मद्भक्तो शठकोपाख्यो भविष्यति मदीच्छया । हरिर्नित्यो यद् वाजनिमपरोदेशिकोवरः ॥१॥ इत्येवमादिभ्यो वेदान्दरामानुजमुनिष्कृतदिव्यसूरि प्रभावदीपिकाख्यग्रन्थवचनेभ्यश्चावगम्यते । अतो न तस्माच्चक्राद्यङ्कितत्वस्य न दण्डधारणस्य न च प्रणवपूर्वकाष्टाक्षरोपदेषस्य प्रवृत्तिरूपपद्यते ।
चतुर्थवर्णजातस्यैतदनधिकारात् । एतेषांवर्णाश्रमत्यागानंगीकाराच्च शठकोपं प्रति विष्वक्सेनं कृताष्टाक्षरोपदेशस्याप्यनुपपत्तेः । तस्माद्ग्रहणानधिकारात् । अतः श्रीरामानुजाच्चक्राद्यङ्कितत्वस्य तथा दण्डग्रहणस्य तथाऽष्टाक्षरोपदेशस्य प्रवृत्तिर्नुतनानीनाद्युपपद्यते । वदन्ति महात्मानस्तथैव एषां सर्वेषां चक्राद्यङ्कितत्वादीनामेतत् प्रवृत्तिदृष्टितः आधुनिकत्वं शास्त्रदृष्टितः सनातनं च यथोपपद्यते । तथा च तिंगलवड़कलधृततिलकयो ��द्विविधयोर्मध्य एकस्यैवतिलकस्य तदाद्याचार्यधृतत्वमुपपद्यते । द्वितीयस्य एकस्मिन्काले ललाटे द्विधातिलकधारणानुपपत्तेश्च कुतो द्वयोः परस्परं विरुद्धकारत्वात् । तथापि स्वपाण्डित्यवलाद्युक्तिविशेषैर्वाचीनस्यैव तिलकस्य शास्त्रीयत्वेन सनातनत्वं प्रतिपादयन्ति ।
अर्वाचीनतिलकधारिणः द्वितीयस्य प्राचीनस्याप्यशास्त्रीयत्वमाधुनिकत्वं च यस्य श्रीसम्प्रदायिनोऽष्टाक्षरं द्वयारव्यम चरमवाक्यं
चेतिमन्त्रत्रयरहस्योपदेष्टुस्तद् गृहीतश्च स्ववर्णाश्रमकर्मधर्मनिष्ठस्य च श्रीसंप्रदायित्वं मन्यन्ते न मन्त्रान्तरोपदेष्टुस्तद् गृहीतुश्च त्यागिनश्च । तथापि "जातिर्विद्या महत्वञ्च रूपयौवनमेव च । वर्जनीचाः प्रपन्नेन पञ्चैते भक्तिकण्टकाः ॥१॥ इत्युक्तेर्जात्याद्यभिमानस्य भक्तिवाधकत्वेन वैष्णवत्ववाधकत्वं ज्ञात्वा आशठकोपस्वामिनः श्रीरामानुजाचार्य्य पर्यन्तानां प्राचीनामाचार्याणांतुरीयवर्णावतीर्णकाञ्चिपूर्णादिवैष्णवोच्छिष्ट भोजनाभिलाषिणां मतं च वुध्वा तथा श्रीरामानुजादर्वाचीनारतदीयाः स्वसंप्रदायिनां भागवतधर्मनिष्ठत्वेन तत्पार्षदत्वं ब्राह्मणानां क्षत्रियादिकुलजातानां स्पृष्टं जलमपि न पिवन्ति, अन्यान्यप्रति इमे श्रीवैष्णवाभगवत्पार्षदा, इत्येवं वदन्ति । तान्वञ्चयितुमिति श्रुत्वादृष्ट्वा च जात्यभिमानस्य भगवत्प्रियभक्तेषु नीचत्वदृष्टिहेतुत्वं तेन भगवद् वैमुख्यकारणत्वं च निश्चित्य तन्निदानभूतं स्ववर्णाश्रमकर्मानुष्ठानं परित्यज्य "अनन्यगतयोमर्त्याभोगिनोपि परंतप । ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥१॥ सर्वधर्मविनाविष्णोर्नाममात्रैकजल्पकाः । सुखेन यां गतिं यान्ति न तां सर्वेऽपिधार्मिकाः ।२।

इत्येवमादि वाक्योक्तार्थमाश्रित्य च" विष्णोरेकैकनामैव सर्ववेदाधिकं मतम् । तादृक् नामसहस्त्रैस्तु रामनामसमं मतम् ॥३॥ जपतः सर्ववेदाँश्च सर्वमन्त्राँश्च पार्वति । तस्मात्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते ॥४॥ षडक्षरं दाशरथेस्तारकं ब्रह्मगद्यते । नाम्नां विष्णोः सहस्त्राणां तुल्य षमहामनुः ॥५॥ अनन्ताभगवन्मन्त्रानानेनतु समाकृताः। श्रियोरमणसामर्थ्यात्सौंदर्यगुणसागरात् ॥६॥ इममेवपरं मन्त्रं ब्रह्मरुद्रादिदेवताः । ऋषयश्च महात्मानो जप्त्वा मुक्ता भावांवुधेः ॥७॥ अद्यापि रुद्रः काश्यां तु सर्वेषां त्यक्तदेहिनाम् । दिशत्येवमहामन्त्रं तारकं ब्रह्मनामकम् ॥८॥ तस्य श्रवणमात्रेण सर्व एव दिवं गताः । इत्येवं स्मृतिभ्यः । अत्रहि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति य एतत्तारकं ब्रह्म ब्रह्मणो नित्यमधीते स पाप्मानं तरति, स मृत्युं तरति, स भ्रूणहत्यां तरति, स ब्रह्महत्यां तरति सवीर हत्यां तरति, स सर्वहत्यां तरति, स संसारं तरति, स सर्वं तरति, सो विमुक्तात्माश्रितो भवति, स महान्भवति, सोऽमृतत्वंच गच्छति ॥ इत्येवमादिभ्यश्च श्रीरामनाम्नः षडक्षरतारकस्य च भगवन्नामान्तरेभ्यश्च कोटिगुणाधिक्येन तत्कोटिगुणाधिकफलप्रदत्वं ज्ञात्वाऽनायासेना ब्राह्मणाद्वर्णबाह्यप्रपन्नानां मुक्तिप्रदत्वं च निश्चित्य श्रीरामानन्दाचार्याः सकलपामरप्राण्युद्धारणाय जगतीतलावतीर्णा काशी सकलजीवविमुक्त्यर्थं “त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् " इति श्रुत्युक्तेः । रुद्रेणो (रुद्रावताररूपेण हनुमता) पदिष्टं गर्भजन्मजरामरणादिभ्यस्तारकत्वात्तारकाख्यम् षडक्षरमुपदिष्टवन्तो विशुद्धं भागवद्धर्मं चस्वशिष्यान्प्रति षडक्षरोपासनानुकूलांतद्वाच्यश्रीजानकीरामोपासनां च तदनुकूलं यत्किञ्चिदन्यदस्ति तदप्युपदिष्टवन्तः । एतेषां श्रीरामानन्दाचार्यद्वारा प्रवृत्तिरिति दृष्ट्याऽऽधुनिकत्वं शास्त्रोक्तदृष्ट्या सनातनत्वं च यथोपपद्यते । श्रीसंप्रदायिनस्तु अष्टाक्षरस्यद्वदाख्यस्य चरमवाक्यं चेति रहस्यत्रयस्यैव स्वपरंपराप्राप्तत्वमत एव स्व स्व संप्रदायित्वं मन्यन्ते न मन्त्रान्तरस्य तेषामाचार्येण श्रीराममन्त्रार्थव्याख्याने श्रीजानकीरुद्रा(हनुमत्)दि परंपरया इमं ब्रह्मतारकमवनीतलेप्रकाशयामास श्रीरामः इत्येवं षडक्षरस्य जानक्यादिपरंपरा प्राप्तरुक्तत्वात्, "इममेव मनुंपूर्वं साकेतपतिर्मामवोचत् । अहं हनूमते मम प्रियाय प्रियतराय । सवेदवेदिने ब्रह्मणे स वशिष्ठाय । स पराशराय। सव्यासाय" इत्युक्तेः । अन्यथा लक्ष्मीविश्वक्सेनशठकोपपरंपरया इमं तारकमवनीतले प्रकाशयामासेत्येवमुक्तिः स्यात्, अत एव षडक्षरमन्त्रवन्तमाचार्यश्रीरामानन्द संप्रदायिनं स्वसंप्रदायवहिर्भूतं मत्वेदानींतनाः श्रीवैष्णवाचार्य्यास्तंप्रति पुनरष्टाक्षरादिकमुपदिशन्ति स्वसंप्रदायित्वोपपत्तये । अन्यथा गुरुलब्धषडक्षरं प्रतिपुनरष्टाक्षरोपपत्तेः । तथापि “विष्णोर्नाम्नां सहस्राणां तुल्य एष महामनुः । अनन्ताभगवन्मन्त्रा नानेन तु समाकृताः ॥१॥ जपतः सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति । तस्मात्कोटिगुणं पुण्यं रामनाम्नैवलभ्यते ॥२॥ रुद्रस्तारकं ब्रह्मव्याचष्टेयेनासावमृतीभूत्वा मोक्षीभवति" इत्येवमादिश्रुतिस्मृतिभ्यो नारायणाष्टाक्षरादिसर्वमन्त्रजपलब्धफलात्कोटिगुणाधिकफलदं षडक्षरं त्याज्यपित्वा तं प्रति पुनरष्टाक्षराद्युपदेष्टुर्दुर्गतिर्दुर्वाराः । उक्तं हि तथैव सुन्दरीतन्त्रे "राममन्त्रसमादाय योऽन्यमन्त्रंसमीहते । गृहीता चैव दाता च उभौ (तौ) नरकगामिनौ" इत्यादि । यद्यप्युक्तरीत्याऽष्टाक्षरादिरहितं न श्रीसम्प्रादायित्वं मन्यते तदीयास्तथापि श्रीजानकीसम्प्रदायित्वं

षडक्षरवतः केन वार्यते । किञ्च "श्रियः श्रीः" इत्युक्तेः श्रियः श्रीः श्रीजानकी प्रवर्त्तितसम्प्रदायस्य श्रीसम्प्रदायित्वं कथं दण्डवारितम् ? ।
यतो जानकीरुद्र (पवनात्मज) परंपरावतः कथञ्चित्प्राप्येमं मन्त्रं स्वशिष्यान्प्रत्युपदिष्टवतः श्रीरामानन्दीय इत्यवगम्यते-उपपद्यते च तथैव, अन्यथा श्रीजानकीपरंपरयाऽवनीतलप्राप्तस्याद्य तत्परं परा संबन्धं विना प्राप्त्यनुपपत्तेः । अतः श्रीजानकीसंप्रदायित्वं स्वीकारे श्रीरामानन्दाचार्यादपि षडक्षरप्रवृत्तेः सनातनत्वमुपपद्यते श्रीजानकीपरंपरया तत्प्रवृत्तिः, श्रीसम्प्रदायित्व स्वीकारे तस्य तस्मात्षडक्षरप्रवृत्तेराधुनिकत्वं श्रीपरंपरया तत्प्रवृत्त्यनुक्तेः । तदेवं यथाष्टाक्षरादेः षडक्षरस्य च प्रवृत्तेस्तत्तद् द्वारा प्रवृत्तिदृष्ट्याऽऽधुनिकत्वं शास्त्रदृष्ट्या तु सनातनत्वम् । तथा श्रीरामानन्दाचार्य रामप्रसाद श्रीरामचरणदासादिद्वारा धनुर्वाणादेश्चन्द्रिकादेः सविन्दुतिलकस्य च प्रवृत्तिस्तत्तद् द्वारा प्रवृत्तिदृष्ट्याऽऽधुनिकत्वं शास्त्रोक्त दृष्ट्या तु सनातनत्वं मन्तव्यम् । अन्यथा चक्रादिधारणस्य तदन्यतरतिलकादिधारणस्य चाधुनिकत्वेन धनुर्वाणादिसविंदुतिलक धारणस्य तुल्यत्वात् । एषां दृष्टान्तेन तेषामपि संप्रदायित्वं नोपपद्यते । उभयत्र तत्तत्प्रवृत्याधुनिकत्वस्य शास्त्रोक्तरीत्या तत्तत्सनातनत्वस्य च समानत्वात् । तदेवं "एतत्तुष्यतु दुर्जनः" इति न्यायेनोक्तम् । वस्तुतस्तु न बिन्द्वादिधारणस्याधुनिकमुपपद्यते । श्रीजानक्या श्रीरामप्रसादाय कृपया दत्तत्वात् । श्रीजानक़्या सनातनत्वेन तद्धृत विन्द्वादेरपिसनातनत्वोपपत्या तल्लब्धविन्द्वादि धारणस्य सनातनत्वोपपत्तेः ।
श्रीजानकीलब्धविन्द्वादिधारणवतां तत्परंपराप्राप्तषडक्षरवतां च श्रीजानकीसंप्रदायित्वोपपत्तेश्च । किं च "देवोभूत्वादेवं यजेत्" इत्येवमाद्युक्तेः । यो यस्योपासकस्तेन तस्य तद् धृतं चिह्न धार्य्यं नान्यदेवधृतं यथा शैवा शिवधृतं भस्म रुद्राक्षादिकमेव धारयन्ति न विष्णुनारायणधृतचक्रादिकं यथा वैष्णवाः विष्णु धृतचक्रादिकमेवधारयन्तनशिवधृतंभस्मरुद्राक्षादिकम् । तथा श्रीरामोपासकानामपि श्रीजानकीरामधृतं तच्चिह्नं विंद्वादिकं धनुर्वाणादिकं चावश्यं धार्यम्, नान्यधृतं चक्रभस्मादिकम् ।
न च रामो विष्णुनारायणावतारत्वेन पठितः पुराणेष्वतः सोऽप्यन्ते, विष्णुनारायणरूपो भविष्यत्यतत्तद् भक्ता अपि विष्णुनारायणभक्ता एवातोऽद्यप्रभृतितेषामपि चक्रादिधारणमुचितमिति वाच्यम् । विष्णुनारायणादीनामपि "ब्रह्मणो रूप कल्पना ॥ द्विचत्वारिषडष्टाशां दशद्वादश षोडष । अष्टादशामी कथिता हस्ताशंखादिभिर्युताः ॥१॥ सहस्त्रांतास्तथा तासां वर्ण वाहनकल्पना" इति रामतापिनीयोपनिषदि-
"महार्णविशयानोऽप्स मां त्वं पूर्वमजीजनः । रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान् ॥१॥ इति वाल्मीकोये च रामाख्यब्रह्मावतारत्वश्रवणात्, □□□□ □□□□□□□□□ त्वदुक्तरीत्या विष्णुनारायणादयोऽप्यन्ते स्वावतारिरामरूपं भविष्यन्ति । “सर्वेषामवताराणामवतारिरघूत्तमः" इत्युक्तेः । अतो विष्णुनारायणादिभक्तानामपि श्रीरामभक्तत्वात् तेषामप्यद्य प्रभृतिधनुर्वाणादिधारणमुचितमिति वक्तव्यात् । नहि-ईदृशो विवादो वैष्णवमतानुकूलोऽस्य शंकरमतसाधकत्वेन वैष्णवमतवाधकत्वात् तत्कुतः एर्वेषां भगवदवताराणां जन्यत्वेनघटादिवद् विनाशित्वानुमाने सर्ववेदान्तवेद्यस्वकारणब्रह्मरूपतयऽवस्थान त्वोपपत्त्यान्तेएकस्यैवाद्वितीयस्य

ब्रह्मणोऽवशेषत्वापत्तेः, तस्मादीदृशं विवादं परित्यज्य मुमुक्षुभिः स्वेष्टदेवप्राप्तिकामैः शास्त्रान्तराविरुद्धस्वाधिकारानुरूपस्वोपासनानुकूलशास्त्रोक्तरीत्या वर्तितव्यम् । तदेवमुक्तरीत्या स्वशरीरस्य स्वेष्टदेवमन्त्राक्षरादिन्यासेन तदायुधादिधारणेन च तत्सादृश्यनिष्पादनेन तत्समीपगमनतत्पूजनयोग्यतां निष्पाद्य तद्यजनादिकं कुर्यात् । स्वलिङ्गशरीरं तु उक्तरीत्योक्त वीजेन ध्यानेन भस्मीकृत्योक्तवीजरामाख्येपिण्डीकृत्य च स्वेष्ट देवसदृशं निष्पाद्य च तत्र स्वेष्टदेववस्त्रभूषणादिस्रगादिधारणेन मनसा कर्पूरागरूकस्तूर्य्यादिदिव्यगन्धानुलेपनेन च तस्य स्वप्राप्य स्वेष्टदेवसमीपगमनतत्कैंकर्य्यविशेषकर णयोग्यतां विभाव्य तं च स्वात्मानं स्वहार्दपुरुषप्रार्थनापूर्वकं तत्कृपयातत्सार्धं सुषुम्नया शरीराद् बहिः निः सार्य्यार्चिरादिमार्गेण साकेताख्यं परं पदं प्रापयित्वा चापरिमितस्तमादिविशिष्टे माणिक्यमण्डपे कल्पतरुमूलेऽष्टदलादिपद्ममध्य रत्नसिंहासनेऽष्टदलकर्णिकायां विराजमानौ श्रीजानकीरामचन्द्रौ ध्यानेन दर्शनसमानाकारौ कृत्वा प्रणम्य च पुनरष्टदलेषु स्थिता चारूशीलादीन्ध्यानेन साक्षात्कृत्य तत्पादौ प्रणम्य च तदाज्ञया यथा कालं भगवदभीष्टं तत्कैंकर्यं कुर्य्यात् । एवमुक्तरीत्या प्रतिदिनं सुषुम्नान्निर्गत्यार्चिरादिमार्गेण परं पदं गत्वोक्तरीत्या प्रेमपूर्वकं स्वामिकैंकर्यं कुर्वतस्तत्कृपादृष्टिमवलोक यतस्तत्प्राप्तिकामस्य श्रीजानकीरामैकशरणस्य तदेकमनस्कस्य च "यं यं वापि स्मरन्भावं त्यंजत्यन्ते कलेवरम् । तं तमेवेति कौंतेय सदा तद्भावभावितः ॥" इत्येवमादिवचनेभ्योऽन्तकालेऽपि तादृशस्मृत्यविस्मृत्यात्तदा भगवत्कृपा दृष्ट्यावलोकितः सन् हार्दपुरुषकृपया तत्सार्धं सुषुम्नशरीराद् वहिर्निर्गत्यार्चिरादिमार्गाभिमानिस्तन्मार्गस्थतत्तल्लोकस्वामिभिरग्निमारभ्यचतुर्मुखपर्यन्तैः पूजितोऽमानवपुरुषैरादृतो विरजायां सरय्वांस्नात्वा तत्र दिव्यमङ्गलविग्रहः सन् परं पदाख्यं तद् धाम गत्वा श्रीसीतारामौ प्राप्य तत्पादौ प्रणमन् ताभ्यां कोडीकृत्य सन्मानितस्तदाज्ञया स्वाभिष्टं तत्कैंकर्यं कुर्वन् ताभ्यां सार्धे विहरन् सदा तत्रैवमोदते, न तस्मात्स्थानात्पुनरावर्तते "न स पुनरावर्तते न स पुनरावर्तते" इति सूत्राच्च ।

## इति श्रीरामप्रसादानुयायिना श्रीहनुमद्दासशिष्येण श्रीमद् हरिदासाख्येन कृतं नित्यकृत्यबोधकप्रबन्धः ॥